मया वध्योऽभविष्यत्स भैमसेनिर्घटोत्कचः ॥ २५
मया न निहतः पूर्वमेष युष्मत्प्रियेप्सया ।
एष हि ब्राह्मणद्वेषी यज्ञद्वेषी च राक्षसः ॥ २६
धर्मस्य लोप्ता पापात्मा तस्मादेष निपातितः ।
व्यंसिता चाप्युपायेन शक्रदत्ता मयानघ ॥ २७
ये हि धर्मस्य लोप्तारो वध्यास्ते मम पाण्डव ।
धर्मसंस्थापनार्थं हि प्रतिज्ञैषा ममाव्यया ॥ २८
ब्रह्म सत्यं दमः शौचं धर्मो ह्रीः श्रीर्धृतिः क्षमा ।
यत्र तत्र रमे नित्यमहं सत्येन ते शपे ॥ २९
न विषादस्त्वया कार्यः कर्णं वैकर्तनं प्रति ।
उपदेक्ष्याम्युपायं ते येन तं प्रसहिष्यसि ॥ ३०
सुयोधनं चापि रणे हनिष्यति वृकोदरः ।
तस्य चापि वधोपायं वक्ष्यामि तव पाण्डव ॥ ३१
वर्धते तुमुलस्त्वेष शब्दः परचमूं प्रति ।
विद्रवन्ति च सैन्यानि त्वदीयानि दिशो दश ॥ ३२
लब्धलक्ष्या हि कौरव्या विधमन्ति चमूं तव ।
दहत्येष च वः सैन्यं द्रोणः प्रहरतां वरः ॥ ३३ C. 7. 8246 B. 7. 181. 33 K. 7. 182. 33

इति श्रीमहाभारते द्रोणपर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६

°भ्यु )पायेन. — d) Dn2 D2.5 S ( G5 missing ) पातितः ( for घा° ). D7.8 कर्णेन वि( D7 om. )निपातितः.

25 D4 om. 25 ( cf. v. l. 23 ). — a) Dn2 एवं ( for एनं ). — b) D5 महाहवे; G1 M1.2 तया मृधे ( for महामृधे ). Ś1 K3 शक्त्या कर्णः कथंचन. — c) Ś K1–3 D1.6 च; B4 वै ( for स ).

26 D4 om. 26 ( cf. v. l. 23 ). — a) T G3.4 मायावी ( for मया न ). G4 न ( for नि- ). — b) Ś1 हितेच्छया; Ś2 K1.2 D1.3.6 प्रियेच्छया ( for °प्सया ). — D6 reads $26^{c}$–$28^{b}$ on marg.

27 D4 om. $27^{ab}$ ( cf. v. l. 23 ). D6 reads 27 on marg. — a) Dn2 यज्ञहंता च पापात्मा; D5.7.8 M3–5 धर्महंता ( M3–5 °लोप्ता ) च पा°; D6 न धर्मगोप्ता पा°. — b) Dn2 M3–5 एव; D3.5 एवं ( for एष ). — c) Ś1 K1.2.4 D1.4–6 ध्वंसिता; D2 भ्रं°; M1.2 दं° ( for व्यं° ). Dc1 सा ( for च ). D5 [अ]भ्युपायेन.

28 D6 reads $28^{ab}$ on marg. — a) M3–5 च ( for हि ). T G2–4 धर्मवि- ( for धर्मस्य ). D6 गोप्तारो ( for लो° ). D4 ये ह्यधर्मस्य गोप्तारो. — b) D6 रक्ष्यास् ( for वध्यास् ). — D6 om. $28^{cd}$. — c) K1 धर्मसंस्थापनार्था हि; Dn2 D2–5.7.8 °पनार्थाय ( D2 °यैव ). — d) Ś2 K1.2 D1 प्रतिष्ठैषा; D3 °ज्ञेयं ( for °ज्ञैषा ). B5 Dn D2–5.7.8 मया कृता; S ( G5 missing ) मयोद्यता ( for ममाव्यया ).

29 a) K1 यमः ( for दमः ). — b) G1 M1.2 transp. ह्रीः and श्रीः. D3 च ( for श्रीर् ). G1 मतिः ( for धृतिः ). — c) Ś2 Dn D2.4.5.7.8 यत्र ( for तत्र ). Dn2 D2.4.5 भवेन्; D7.8 भवन्; G3.4 नमे ( for रमे ). D3 यत्र तत्र न मे द्वेषः. — d) D3 सखे ( for अहं ). M3 केशवे ( sic ) ( for ते शपे ). Dn2 D2.4.5.7.8 अहं तत्राभवं स( Dn2 °वं त-; D2 °यं स )दा.

30 a) Ś2 मा ( for न ). Dn2 D2.4.5.7.8 अप्रमादस् ( for न विषादस् ). — c) D5 उपदेष्यामि ( for °क्ष्यामि ). B3 उपायेन ( for °यं ते ). — d) Dn2 सं-; D5.7 T G2–4 M3–5 त्वं ( for तं ). B1 D5 प्रहरि( D5 °नि )ष्यसि; G2 विषहि° ( for प्रसहि° ).

31 a) B3 Dc1 दुर्योधनं ( for सुयो° ). — b) D3 वधिष्यति ( for हनि° ). — c) Ś1 B3–5 T G2–4 transp. अपि and च. D4 तस्य चापविधोपायं ( sic ). — d) Dn2 वक्ष्ये च तव पांडव; D4.5.7.8 विवक्ष्ये ( D5 °क्षे ) तत्र पांडव.

32 a) Dc1 Dn1 तुमलस्; Dn2 तुमलुस् ( for तुमुलस् ). Ś1 चैष; K3 चैव ( for स्त्वेष ). D4.5.7.8 वर्धते तुमलः पार्थ. — c) Dn2 D4.5.7.8 हि ( for च ). — d) D3 त्वदीयानां ( for °यानि ). Ś K ( K5 missing ) D1.3.6 समंततः ( for दिशो दश ).

33 a) K2 Dc1 Dn1 D3.4 S ( G5 missing ) -लक्षा ( for -लक्ष्या ). D7.8 G3.4 कौरव्य ( for °व्या ). — b) K4 D1.5 प्रति ( for तव ). — c) B1 Dc1 D4.5.7.8 G1 M1.2 एव ( for एष ). D1 वरः ( for च वः ). Dn2 D2.4.5.7.8 नः संख्ये ( for वः सैन्यं ).

# १५७

C. 7. 8247
B. 7. 182. 1
K. 7. 183. 1

धृतराष्ट्र उवाच ।
एकवीरवधे मोघा शक्तिः सूतात्मजे यदा ।
कस्मात्सर्वान्समुत्सृज्य स तां पार्थे न मुक्तवान् ॥ १
तस्मिन्हते हता हि स्युः सर्वे पाण्डवसृञ्जयाः ।
एकवीरवधे कस्मान्न युद्धे जयमादधत् ॥ २
आहूतो न निवर्तेयमिति तस्य महाव्रतम् ।
स्वयमाह्वयितव्यः स सूतपुत्रेण फल्गुनः ॥ ३
ततो द्वैरथमानीय फल्गुनं शक्रदत्तया ।
न जघान वृषा कस्मात्तन्ममाचक्ष्व संजय ॥ ४
नूनं बुद्धिविहीनश्चाप्यसहायश्च मे सुतः ।
शत्रुभिर्व्यंसितोपायः कथं नु स जयेदरीन् ॥ ५
या ह्यस्य परमा शक्तिर्जयस्य च परायणम् ।
सा शक्तिर्वासुदेवेन व्यंसितास्य घटोत्कचे ॥ ६
कुणेर्यथा हस्तगतं ह्रियेद्बिल्वं बलीयसा ।
तथा शक्तिरमोघा सा मोघीभूता घटोत्कचे ॥ ७
यथा वराहस्य शुनश्च युध्यतो-

Colophon om. in Ś K1–3: K5 G5 missing. — *Sub-parvan:* D1 Editions घटोत्कचवध. — *Adhy. name:* K4 B Dc1 Dn D2–8 G1. 2 M1. 2 रात्रियुद्धे; Bom. ed. रात्रियुद्धे कृष्णवाक्यं. — *Adhy. no.* (figures, words or both): Dn1 D2 182; D3 75; T G2–4 176; G1 M1. 2 175; M3–5 174. — *Śloka no.:* Dc1 Dn1 33.

## 157

☞ This adhy. is missing in K5 G5 (cf. v. l. 7. 125. 14; 137. 9).

1 Dn2 om. (hapl.) 1a–2b. —a) B1 -वधो (for -वधे). Ś2 K1. 2 D1 T G2–4 मोघां; B1 नाम; B2 घोरा; D2. 4. 5 मोहात् (for मोघा). —b) G1 M1. 2 सूतात्मजो. Ś1 K3 यथा; B3. 5 तदा; D7. 8 यदि; M3–5 सदा (for यदा). Ś2 K1. 2. 4 T G2–4 शक्तिं सूतात्मजस्तदा (T G3. 4 °जो यथा; G2 °जो यदा); B2 (marg. as in text) D2. 4. 5 शक्तिः (D2 °क्त्या) सूतात्मजेन वै (B2 सा). —c) G4 कस्मिन्; M4 तस्मात् (for कस्मात्). T G3. 4 भैमे (for सर्वान्). —d) B1 कस्मान् (for स तां).

2 Dn2 om. 2ab (cf. v. l. 1). —a) D2 शक्यः; D4. 5 शक्त्या; G2 एव (for हि स्युः). —b) D4. 5. 7. 8 सर्वे संजयपांडवाः. —c) D3 (marg.). 4. 5. 7. 8 फाल्गुनस्य (for एकवीर-). —d) K4 Dn2 S (G5 missing) युद्धे न (by transp.). B Dc1 Dn1 युद्धे न जयमादधे; D2. 4. 5 युद्धेन जयतां वरः; D7. 8 न मुमोच सतां वृषः.

3 a) D4. 5 निवर्तेतम् (for °यम्). Dn2 आहूतो निवर्तेयम्. —b) Dn2 इ* तेन व्रतं कृतं; D4. 5. 7. 8 इति तेन कृतं व्रतं (D4 वरं). —c) Ś K3 आहूयितव्यः; K1. 2 आहूय°; K4 D3 मार्गयि° (for आह्वयि°). S (G5 missing) तु (for स). —d) K4 B D फाल्गुनः.

4 a) G1 M1. 2 आहूय (for आनीय). —b) K3. 4 B D फाल्गुनं. —c) K (K5 missing) B Dc1 Dn1 D1 जघान न (by transp.). N (K5 missing) वृषः (for वृषा).

5 a) K1 युधि; D4 युद्ध-; D6 तेन (for बुद्धि-). S (G5 missing) -विहीनाश्. —b) D4. 5. 7. 8 असहायश् (for [अ]प्यस°). S (G5 missing) अनुपा(G1 M °सहा)याश्च मे सुताः. —c) S (except G3; G5 missing) व्यंसितोपायाः (for °यः). —d) D2. 4. 5. 7. 8 स कथं नु (D2 सं-) जयेदरीन्; S (G5 missing) विजयेरन्कथं रिपून्.

6 a) T G2–4 साप्यस्य (for या ह्यस्य). D7. 8 च परा (for परमा). Dn2 D4 यस्यास्ति च परा शक्तिर्; D1 यस्माद्धि च परा श°. —b) D6 विजयस्य (for जयस्य च). —d) K4 B5 Dn D2. 5–8 M1. 2 च; D3 तु; D4 [अ]स्मि; T G3. 4 [आ]सीद्; G2 [अ]स्मिन् (for [अ]स्य).

7 a) Ś1 K3 तूर्णं (for कुणेर्). —b) Ś K2. 3 D1. 3. 6 हार्यं; K1 हर्य-; T G3. 4 M1. 5 (*inf. lin.*) हरेद् (for ह्रियेद्). D5 हाविर्षभं (?); D7 ह्रय** (for ह्रियेद्बिल्वं). K4 Dn2 D2. 4. 8 फलं; B1. 2. 4 D3 वित्तं; M3 बलं (for बिल्वं). T G3. 4 बली यथा (for बलीयसा).

8 a) Dn D4. 5 युद्धे; M3–5 युध्यतस् (for °तोस्). —b) Dn2 द्वयोर् (for तयोर्). D1 अलाभे (for अभावे). —c) K2 G4 M3 विद्वान्; D4. 8 ह्ययं; D5. 7

स्तयोरभावे श्वपचस्य लाभः ।
मन्ये विद्वन्वासुदेवस्य तद्व-
द्युद्धे लाभः कर्णहैडिम्बयोर्वै ॥ ८
घटोत्कचो यदि हन्याद्धि कर्णं
परो लाभः स भवेत्पाण्डवानाम् ।
वैकर्तनो वा यदि तं निहन्या-
त्तथापि कृत्यं शक्तिनाशात्कृतं स्यात्
इति प्राज्ञः प्रज्ञयैतद्विचार्य
घटोत्कचं सूतपुत्रेण युद्धे ।
अयोधयद्वासुदेवो नृसिंहः
प्रियं कुर्वन्पाण्डवानां हितं च ॥ १०

संजय उवाच ।

एतच्चिकीर्षितं ज्ञात्वा कर्णे मधुनिहा नृप ।
नियोजयामास तदा द्वैरथे राक्षसेश्वरम् ॥ ११
घटोत्कचं महावीर्यं महाबुद्धिर्जनार्दनः ।
अमोघाया विघातार्थं राजन्दुर्मन्त्रिते तव ॥ १२
तदैव कृतकार्या हि वयं स्याम कुरूद्वह ।
न रक्षेद्यदि कृष्णस्तं पार्थं कर्णान्महारथात् ॥ १३
साश्वध्वजरथः संख्ये धृतराष्ट्र पतेद्भुवि ।
विना जनार्दनं पार्थो योगानामीश्वरं प्रभुम् ॥ १४
तैस्तैरुपायैर्बहुभी रक्ष्यमाणः स पार्थिव ।
जयत्यभिमुखः शत्रून्पार्थः कृष्णेन पालितः ॥ १५
सविशेषं त्वमोघायाः कृष्णोऽरक्षत पाण्डवम् ।
हन्यात्क्षिप्ता हि कौन्तेयं शक्तिर्वृक्षमिवाशनिः ॥ १६

धृतराष्ट्र उवाच ।

विरोधी च कुमन्त्री च प्राज्ञमानी ममात्मजः । 7. 2263 7. 182. 17 7. 183. 17

द्वहं; $G_{2}$ तद्वद् (for विद्वन्). $D_{3}$ $G_{2}$ लाभो; $G_{1}$ तस्य (for तद्वद्). —$^{d}$) $Dn_{2}$ $D_{2.4.5.7}$ वधे; $D_{3}$ तद्वद्; $G_{2}$ विद्वन् (for युद्धे). $B_{4}$ लाभं; $D_{3}$ $G_{2}$ युद्धे (for लाभः). $Dc_{1}$ Dn $D_{4.5.7.8}$ -हैडंबयोर् (for -हैडिम्बयोर्). Ś $K_{1-3}$ $D_{1}$ $G_{2}$ च (for वै).

9 $^{a}$) $G_{1}$ $M_{1.2}$ तु (for हि). —$^{b}$) $D_{4.5.7.8}$ परोपि (for परो). T $G_{3.4}$ हि चेत् (for भवेत्). —$^{c}$) $Dn_{2}$ $D_{4.5.7.8}$ यदि वा तं; $D_{6}$ वै यदि नो तं (for वा यदि तं). T $G_{1-4}$ घटोत्कचं यदि कर्णो वि($G_{1}$ नि)हन्यात्; M घटोत्कचं वा यदि कर्णो निहन्यात्. —$^{d}$) $Ś_{1}$ $K_{3}$ शकुनिना (for शक्तिनाशात्). $K_{4}$ कथं (for कृतं).

10 $^{a}$) $Dn_{2}$ $D_{4.5.7}$ [ए]वं (for [ए]तद्). $K_{4}$ B $Dc_{1}$ $Dn_{1}$ $D_{2.3.6}$ S ($G_{5}$ missing) विचिंत्य (for विचार्य). $D_{8}$ इति प्राज्ञस्तथैवं विचार्य. —$^{b}$) $D_{5}$ $M_{3.5}$ संख्ये; $M_{4}$ संखे (for युद्धे). —$^{c}$) $K_{3.4}$ B $Dc_{1}$ Dn $D_{2.4.5}$ S ($G_{5}$ missing) अ($Dn_{2}$ आ)घातय($D_{4}$ °थे)द्; $D_{8}$ अयोज° (for अयोध°). T $G_{2-4}$ निगृह्य; $G_{1}$ M नरेंद्रः ($M_{3.5}$ °द्र) (for नृसिंहः). —After 10, $K_{4}$ $B_{5}$ $Dn_{2}$ $D_{1.2.4.5.8}$ T $G_{2-4}$ $M_{3-5}$ ins. an addl. colophon [*Sub-parvan :* $D_{1}$ घटोत्कचवध. —*Adhy. name :* $K_{4}$ $B_{5}$ $D_{1.2.4.5.8}$ रात्रियुद्धं. —*Adhy. no.:* $D_{2}$ 183; T $G_{2-4}$ 177; $M_{3-5}$ 175].

11 $^{a}$) $D_{2.5}$ एवं (for एतच्). —$^{b}$) $G_{2}$ ततः (for नृप). $K_{4}$ $Dn_{2}$ $D_{4.5.8}$ कर्णस्य ($D_{8}$ °र्णेन) मधुहा नृप; B $Dc_{1}$ $Dn_{1}$ $D_{2}$ कर्णस्य मधुसूदनः. —$^{c}$) $G_{1}$ $M_{1.2}$ योजयामास तु तदा. —$^{d}$) $Dn_{2}$ T $G_{2-4}$

12 $^{c}$) $K_{3.4}$ $B_{4.5}$ $Dn_{1}$ $D_{8}$ अमोघायां; $G_{1}$ $M_{1.2}$ °घया (for °घाया). $D_{2}$ S (except $G_{3}$; $G_{5}$ missing) विनाशार्थं (for विघातार्थं).

13 $^{a}$) $D_{2.4.5}$ तथा (for तदा). T [इ]व (for [ए]व). —$^{b}$) $D_{3.6}$ T $G_{1.3.4}$ $M_{1.2}$ स्यामः (for स्याम). —$^{c}$) $Dn_{2}$ रक्षेत; $G_{3.4}$ न रक्ष्येद् (for न रक्षेद्). $D_{4.5.7.8}$ रक्षेद्यदि न कृष्णस्तं. —$^{d}$) $D_{2.4.5.7.8}$ कर्णात्पार्थं ($D_{2}$ °र्थं) महारथं ($D_{2}$ °थात्).

14 $^{a}$) Ś $K_{1.2}$ $D_{1}$ -सूत- (for -ध्वज-). $G_{1}$ -रथं. $G_{1}$ $M_{1.3.4}$ संखे; $G_{4}$ संघे (for संख्ये). —$^{b}$) $Dn_{2}$ $D_{8}$ हतो भवेत्; $D_{4.5.7.8}$ ह($D_{4}$ हि)तोभवत् (for पतेद्भुवि). $B_{5}$ धार्तराष्ट्रो जयेद्भुवि. —$^{d}$) T ईश्वरः (for °रं). $D_{4.5}$ $G_{3}$ योगानामीश्वरः प्रभुः; $G_{4}$ योधानामीश्वरः प्रभुं.

15 $^{b}$) $Dn_{2}$ $D_{3.5.6.8}$ $G_{1}$ $M_{1.3.4}$ रक्षमाणः. $Ś_{2}$ $B_{1}$ $D_{2}$ पांडवः; $K_{1.2}$ $B_{2-5}$ Dn $D_{1.3.7.8}$ T $G_{2-4}$ पार्थिवः (for °व). $D_{4}$ रक्ष्यमाणास्त्वमर्षतः. —$^{c}$) $G_{1}$ $M_{1.2}$ [अ]भिमुखं. $Dn_{2}$ जयत्यभिमुखान्पार्थो. —$^{d}$) $Dn_{2}$ रिपून् (for पार्थः). $Ś_{2}$ $K_{4}$ रक्षितः; S ($G_{5}$ missing) वीर्यवान् (for पालितः).

16 $^{a}$) $B_{5}$ $Dn_{2}$ $D_{2.4.5}$ सविशेषाद्; $D_{7.8}$ सवि-

C. 7. 8263
B. 7.
K. 7. 183. 17

यस्यैष समतिक्रान्तो वधोपायो जयं प्रति ॥ १७
तवापि समतिक्रान्तमेतद्गावल्गणे कथम् ।
एतमर्थं महाबुद्धे यत्त्वया नावबोधितः ॥ १८

संजय उवाच ।

दुर्योधनस्य शकुनेर्मम दुःशासनस्य च ।
रात्रौ रात्रौ भवत्येषा नित्यमेव समर्थना ॥ १९
श्वः सर्वसैन्यानुत्सृज्य जहि कर्ण धनंजयम् ।
प्रेष्यवत्पाण्डुपाञ्चालानुपभोक्ष्यामहे ततः ॥ २०
अथ वा निहते पार्थे पाण्डुष्वन्यतमं ततः ।
स्थापयेद्युधि वार्ष्णेयस्तस्मात्कृष्णो निपात्यताम् ॥ २१
कृष्णो हि मूलं पाण्डूनां पार्थः स्कन्ध इवोद्गतः ।
शाखा इवेतरे पार्थाः पाञ्चालाः पत्रसंज्ञिताः ॥ २२
कृष्णाश्रयाः कृष्णबलाः कृष्णनाथाश्च पाण्डवाः ।
कृष्णः परायणं चैषां ज्योतिषामिव चन्द्रमाः ॥ २३
तस्मात्पर्णानि शाखाश्च स्कन्धं चोत्सृज्य सूतज ।
कृष्णं निकृन्धि पाण्डूनां मूलं सर्वत्र सर्वदा ॥ २४
हन्याद्यदि हि दाशार्हं कर्णो यादवनन्दनम् ।
कृत्स्ना वसुमती राजन्वशे ते स्यान्न संशयः ॥ २५

---

मर्शन् (for सविशेषं). K4 T G2–4 त्वमेयात्मा; Dn1 च मोघायाः; D4 त्वमोघात्मा; D5. 7. 8 अमोघायाः; G1 M न चेदत्र (for त्वमोघायाः). —b) D4. 5 G1 M रक्षति (for ऽरक्षत). T G2–4 कृष्णो रक्षेन्न फल्गुनं. —c) K2–4 Dn D2. 4. 5 क्षिप्रं (for क्षिप्ता).

17 a) T वक्र- (for च कु-). D2 कुमित्रं (for कुमन्त्री). —b) K2 प्राज्ञामानी; G2 प्रज्ञा°; G3 प्रज्ञ** (for प्राज्ञमानी). —c) Ś1 K1–3 B1. 4 D1. 6 (marg.) यदि (for यस्य). D3. 6 समनुक्रांतो (for °तिक्रान्तो). —d) G1 M1. 2 जयोपायो (for वधो°). K2 (marg.) B Dc1 Dn1 [ऽ]र्जुनं (for जयं). — After 17, K2 (marg.) B Dc1 Dn ins.:

1252* स वा कर्णो महाबुद्धिः सर्वशस्त्रभृतां वरः ।
न मुक्तवान्कथं सूतताममोघां धनंजये ।

[ (L. 1) B (except B4) Dc1 च (for वा). —(L. 2) K2 मोघां च (for अमोघां). ]

18 D2 om. 18. —a) Ś K (K5 missing) D1 तथा; M3–5 त्वया (for तव). —b) M3–5 एष (for एतद्). A few MSS. गावल्गने. —c) K2 D1. 3–5. 7. 8 T G2–4 एतद्; B (except B2) Dc1 एनम् (for एतम्). D4. 5 अर्थो. D3. 4. 6 T G2–4 M3. 4 महायुद्धे (for °बुद्धे).

19 G3 om. the ref. —b) B5 मम दुःशासनेन च. —c) Dn1 [ए]षां; D8 [ए]व (for [ए]षा). —d) Dn1 एषां; T G2–4 एषा (for एव). S (G5 missing) विकत्थना (for समर्थना).

20 a) D2 त्वं (for श्वः). Dc1 G1 M श्वः सर्वसैन्यान्युत्सृज्य; Dn2 D3–5. 7. 8 त्वं (D3 श्वः) सर्वसैन्यमुत्सृज्य. —c) K1. 2 Dn2 प्रे(Dn2 प्रै)षयत् (for प्रेष्यवत्). K1. 2 -पांचालाव्; Dc1 Dn1 -पुत्राणाम् (for -पाञ्चालान्). —d) B1 वयं (for ततः).

21 K3 om. (hapl.) 21ab. —b) T2 G3. 4 अन्यतरं; M3. 4 °तमः (for °तमं). S (G5 missing) पुनः (for ततः). Bom. ed. पांडवान्यतमं ततः. —c) K4 B Dc1 Dn1 D1 M3–5 यदि (for युधि). —d) K4 निपातितां (sic); B Dc1 Dn1 D2 हि हन्यतां; S (G5 missing) निहन्यतां (for निपात्यताम्).

22 a) Ś2 D6 पार्थानां (for पाण्डूनां). T G2–4 M1 (before corr. as in text). 3–5 कृष्णो मूलमनर्थानां. —b) Ś2 K1. 2 [उ]त्थितः (for [उ]द्गतः). —c) D2 शेषा (for शाखा). —d) Dn2 D4. 5. 7. 8 पत्रसंज्ञ(D8 °ज्ञि)काः; D6 °वत्स्थिताः (for °संज्ञिताः). K1 पांचालः पत्रसंज्ञितः.

23 b) D4. 5. 7. 8 स्म (for च). —c) D8 कृष्ण- (for कृष्णः). Ś1 D6 T G3. 4 तेषां; D4 चैव (for चैषां). Ś2 K1. 2 B2 D1. 3 G2 कृष्णः परायणस्तेषां.

24 a) D3 शाखां (for शाखाश्). D6 तस्माच्छाखाश्च पर्णानि. —b) B4 D1 T G3. 4 स्कंधाश्; B5 स्कंदं. D1 उत्सृज्य (for चो°). —c) D3 कृष्णो. K1 निगंधि; K4 निकृत्य; B1–4 Dc1 निकृंत; B5 Dn D2 हि विद्धि; D1 corrupt; D3 निमित्तं; D4. 5. 7. 8 हि सिंधि; D6 निकृत्त; G3 हि कृंधि (for निकृन्धि).

25 a) G2 यदि हन्याद् (by transp.). K4 om. (hapl.) from दाशार्हं up to यदि हि (in 26a). —b) D6 कृष्णं; G1 M1. 2 कर्णं (sic) (for कर्णो). —d) Ś1 (before corr.) वशी; Ś2 वशं; K1 वंशे (for वशे). B5 स्यान्नात्र; Dn1 D2. 4. 5. 8 तस्य न; D6 नो[? नः] स्यान्न; D7 तेस्य न (for ते स्यान्न). — After 25, G1 M ins.:

यदि हि स निहतः शयीत भूमौ
यदुकुलपाण्डवनन्दनो महात्मा ।
ननु तव वसुधा नरेन्द्र सर्वा
सगिरिसमुद्रवना वशं व्रजेत ॥ २६
सा तु बुद्धिः कृताप्येवं जाग्रति त्रिदशेश्वरे ।
अप्रमेये हृषीकेशे युद्धकाले व्यमुह्यत ॥ २७
अर्जुनं चापि कौन्तेयं सदा रक्षति केशवः ।
न ह्येनमैच्छत्प्रमुखे सौतेः स्थापयितुं रणे ॥ २८
अन्यांश्चास्मै रथोदारानुपस्थापयदच्युतः ।
अमोघां तां कथं शक्तिं मोघां कुर्यामिति प्रभो ॥ २९
ततः कृष्णं महाबाहुः सात्यकिः सत्यविक्रमः ।
पप्रच्छ रथशार्दूल कर्णं प्रति महारथम् ॥ ३०
अयं च प्रत्ययः कर्णे शक्त्या चामितविक्रम ।
किमर्थं सूतपुत्रेण न मुक्ता फल्गुने तु सा ॥ ३१

C. 7. 8280
B. 7. 182. 34
K. 7. 183. 34

---

1253* सा तु बुद्धिः कृता राजन्कृष्णं प्रति नरेश्वर ।
विष्णोस्तेजःप्रमूढानां युद्धकाले प्रणश्यति ।

[ ( L. 1 ) G1 M1 जातु; M2 या तु ( for सा तु ). ]

26 K4 om. up to यदि हि ( cf. v. l. 25 ). G1 M1 ( *inf. lin. sec. m.* ). 2 read 26 after 29. — $^{a}$ ) K1 ( before corr. ) B4 D4 G1 M1. 4 om.; K2 D1. 6 ( before corr. as in text ) ह ( for हि ). Dn2 D4 संनिहतः. K2 D1 शयेत ( for शयीत ). Ś2 यदि स विनिहतः शयेत भूमौ. — $^{b}$ ) B2. 5 -पांडवरक्षको; B3 ( also as in text ) -पांचालनंदनो; D5 -पांडुनंदनो ( for -पाण्डव° ). — $^{c}$ ) Dn1 बत ( for ननु ). — $^{d}$ ) Dn1 वशा ( for वशं ). Dn2 D3 व्रजेत्; D4. 5. 7. 8 व्रजेत्सा ( for व्रजेत ).

27 Before 27, M1 ( *inf. lin. sec. m.* ). 3–5 ins. धृतराष्ट्रः. — $^{a}$ ) D8 कृतो ( for कृता ). — $^{b}$ ) D4. 5. 8 जागर्ति ( for जाग्रति ). Ś2 K1. 2 M5 त्रिदिवेश्वरे; D4 त्रिदिशे° ( for त्रिदशे° ). T G3. 4 अर्जुने जगदीश्वरे; G2 जाग्रति त्रिदशेश्वर. — $^{c}$ ) D2 om. from अप्रमेये up to काले व्य ( in 27$^{d}$ ). D1 अप्रमेय- ( for °ये ). S ( G5 missing ) केशवे च यदुश्रेष्ठे. — $^{d}$ ) K4 B2 विमुह्यत; B4. 5 Dn1 G1 M1. 2 [ ऽ ]व्यमुह्यत ( M1. 2 °तं ); Dn2 D4. 5. 7. 8 ह्य ( Dn2 त्व ) मुह्यत.

28 D2 om. 28. D8 om. 28$^{a}$–29$^{b}$; D6 ( *sec. m.* ) reads the same on marg. — $^{a}$ ) Dc1 Dn1 वापि; T G2–4 M3. 5 चैव ( for चापि ). K3 B S ( G5 missing ) राधेयात् ( for कौन्तेयं ). — $^{b}$ ) Ś1 परि- ( for सदा ). — $^{c}$ ) D4. 5. 7 इच्छेत्; G1 M1. 2 इच्छन् ( for ऐच्छत् ). — $^{d}$ ) Ś2 D4 G3. 4 सौते ( for सौतेः ).

29 D8 om. 29$^{ab}$ ( cf. v. l. 28 ). D6 reads 29$^{ab}$ on marg. — $^{a}$ ) Ś K1. 2 D1. 6 चैव; M3. 5 चास्य ( for चास्मै ). — $^{b}$ ) K3. 4 B Dc1 Dn M1 उपास्थापयद्; D4. 5. 7 उद°. D6 अर्जुनः ( for अच्युतः ). — $^{c}$ ) Ś1 K1–3 D1. 3. 6 रणे; Ś2 महा-; G1 M1. 2 यथा ( for कथं ). — $^{d}$ ) Ś2 B3 मोघी-; Dn1 M1. 2 मोघं. Dc1 D1 कुर्याद्. — After 29, B Dn2 D3. 5. 6 ins.:

1254* यश्चैवं रक्षते पार्थं कर्णात्कृष्णो महामनाः ।
आत्मानं स कथं राजन्न रक्षेत्पुरुषोत्तमः ।
परिचिन्त्य तु पश्यामश्चक्रायुधमरिंदमम् ।
न सोऽस्ति त्रिषु लोकेषु यो जयेत जनार्दनम् ।

Colophon.

[ ( L. 1 ) B1. 4 D5. 6 यश्चैव; Dn2 यच्चैवं; D3 यश्चैव. — ( L. 3 ) Dn2 D3. 6 पश्यामि ( D3 °म ). D5 अरिंदम. — ( L. 4 ) D3. 6 न सोस्ति यो जयेत्तं तु ( for the prior half ). D3. 6 त्रैलोक्ये तु ( for यो जयेत ). D5 हि माधवं ( for जनार्दनम् ). — Colophon om. in Dn2 D3. — *Adhy. name:* B D5 रात्रियुद्धं; D6 रात्रियुद्धे कृष्णप्रसादाच्छक्तिमोक्षणमुपायं विस्मृतं ( sic ). ]

On the other hand, G1 M1. 2 read 26 after 29.

30 Before 30, B Dc1 Dn D2. 4. 5. 8 ( *sec. m.* ) G1 M3–5 ins. संजय उवाच; M1. 2 सात्यकिः. D6 ( *sec. m.* ) reads 30–31 on marg. — $^{a}$ ) Ś1 ( orig. ). 2 K2. 3 D1. 6 एतदर्थं; Ś1 ( marg. ) तव अर्थं; K1 D7. 8 एतमर्थं; K4 एतदर्थे ( for ततः कृष्णं ). K1. 4 B Dc1 Dn2 D2. 4. 5. 7. 8 महाबाहुं ( K1 D7. 8 °हो ). — $^{b}$ ) Dc1 Dn1 D7. 8 सात्यकिर्देवकीसुतं. — $^{c}$ ) Ś1 K3 नृप-; D5 नर-; S ( G5 missing ) कुरु- ( for रथ- ). Ś2 K1. 2. 4 B D ( except D4 ) -शार्दूलः ( for °ल ). — $^{d}$ ) B ( except B5 ) Dn2 महारथः; T G3. 4 M1. 2 °बलः; G1 M3–5 °बलं ( for °रथम् ). D2 कर्णं वैकर्तनं प्रति.

31 Before 31, D6 G1 M3–5 ins. सात्यकिः. D6 reads 31 on marg. — $^{a}$ ) M1. 2 चेत् ( for च ). Dn2 D4. 5 T G3. 4 कर्णः ( for कर्णे ). D7. 8 स्वयं प्रत्ययितः कर्णः ( D7 °र्णे ). — $^{b}$ ) K3. 4 B Dc1 Dn D1 शक्तिश्; G1 शक्त्यां; M1. 2. 4. 5 शक्त्याश्. D2 वा ( for च ). Ś2 K ( K5 missing ) B5 Dc1 D1. 6 -विक्रमे; B3

C. 7. 8281
B. 7. 182. 35
K. 7. 183. 35

वासुदेव उवाच ।
दुःशासनश्च कर्णश्च शकुनिश्च ससैन्धवः ।
सततं मन्त्रयन्ति स्म दुर्योधनपुरोगमाः ॥ ३२
कर्ण कर्ण महेष्वास रणेऽमितपराक्रम ।
नान्यस्य शक्तिरेषा ते मोक्तव्या जयतां वर ॥ ३३
ऋते महारथात्पार्थात्कुन्तीपुत्राद्धनंजयात् ।
स हि तेषामतियशा देवानामिव वासवः ॥ ३४
तस्मिन्विनिहते सर्वे पाण्डवाः सृञ्जयैः सह ।
भविष्यन्ति गतात्मानः सुरा इव निरग्नयः ॥ ३५
तथेति च प्रतिज्ञातं कर्णेन शिनिपुंगव ।
हृदि नित्यं तु कर्णस्य वधो गाण्डीवधन्वनः ॥ ३६
अहमेव तु राधेयं मोहयामि युधां वर ।
यतो नावसृजच्छक्तिं पाण्डवे श्वेतवाहने ॥ ३७
फल्गुनस्य हि तां मृत्युमवगम्य युयुत्सतः ।
न निद्रा न च मे हर्षो मनसोऽस्ति युधां वर ॥ ३८
घटोत्कचे व्यंसितां तु दृष्ट्वा तां शिनिपुंगव ।
मृत्योरास्यान्तरान्मुक्तं पश्याम्यद्य धनंजयम् ॥ ३९
न पिता न च मे माता न यूयं भ्रातरस्तथा ।
न च प्राणास्तथा रक्ष्या यथा बीभत्सुराहवे ॥ ४०
त्रैलोक्यराज्याद्यत्किंचिद्भवेदन्यत्सुदुर्लभम् ।
नेच्छेयं सात्वताहं तद्विना पार्थं धनंजयम् ॥ ४१
अतः प्रहर्षः सुमहान्युयुधानाद्य मेऽभवत् ।

Dn2 -विक्रमा (sic); Dn1 D2–5. 8 T G2–4 -विक्रमः. D7 शक्त्यां चामितिविक्रमः. —[d]) Some MSS. फाल्गुने. Dn2 D2. 4. 5. 7. 8 तदा; T G1–3 M हि सा; G4 स्म सा (for तु सा). Dc1 Dn1 D1 न मुक्ता फाल्गुनस्य (D1 °नेन) सा.

32 D6 (*sec. m.*) reads the ref. on marg. Some MSS. कृष्ण (for वासुदेव). —[b]) Ś K1–3 D1 [ए]व सैंधवः; D5 [अ]पि सैंधवः; T G1. 3. 4 M महाबलः; G2 [अ]पि सौबलः (for ससैन्धवः).

33 [b]) D4. 5. 7. 8 रणे अ(D7. 8 चा)मितविक्रम. —[c]) Dn1 नान्यत्र; M3–5 नान्यस्मै (for °स्य). D1 एषां. —[d]) K4 रणे; D4 वरः (for वर).

34 [a]) B कर्णं; D4 पार्थः (sic); S (G5 missing) वीरात् (T2 °र) (for पार्थात्). —[c]) M3 अतिशया (for °यशा).

35 [a]) M3–5 विनिर्जिते (for °हते). K1 वीरे; B पार्थे (for सर्वे). —[b]) Ś1 K3 संजयाः पांडवैः सह; Dn1 पांडवाः सह संजयैः. — D5 om. 35[cd]. —[c]) Dn2 M3–5 हतात्मानः; D4 महा° (for गता°). — After 35, Dc1 Dn1 ins.:

1255* ऋते महात्मनः पार्थात्कर्णेन निहता ध्रुवम् ।

36 [a]) D5 तेन (for [इ]ति च). —[b]) K1. 2 D4. 7. 8 शनि- (for शिनि-). —[c]) B (except B3) च; S (G5 missing) हि (for तु). —[d]) Dc1 गांजीव- (for गाण्डीव-). K1 D4. 6–8 G2 M1. 2 -धन्विनः (for -धन्वनः).

37 [b]) B2. 5 D4. 7. 8 T G3. 4 वरं; Dn2 वरः. —[c]) Ś2 अतो; B2–5 D (except D1) ततो; T G3. 4 M4. 5 यथा; G2 यत्तां; M3 तथा (for यतो). Ś1 K3. 4 B2–5 Dn D2. 4. 5. 7. 8 [अ]वासृजत्; K1. 2 M5 [अ]वासृजेत्. B1 ततोयं नासृजच्छक्तिं.

38 [a]) Some MSS. फाल्गुनस्य. Dc1 Dn1 तु (for हि). B1. 2. 4. 5 Dn1 D2 तं; D4. 5. 7. 8 सा (for तां). K4 om. from मृत्यु up to वर (in 38[d]). D4. 7. 8 मृत्युर् (for मृत्युम्). —[b]) Ś K1–3 B Dc1 Dn2 D1–8 अनिवार्यं (Ś2 D1. 2 °र्यं; Dc1 Dn2 D3. 6 °र्यां; D4. 5 °र्यो; D7. 8 °र्या); Dn1 अतिवार्यं (for अवगम्य). D6 reads from युयुत्सतः up to दृष्ट्वा तां (in 39[b]) on marg. D1. 7 युयुत्सत; D2. 4. 6 M3 °त्सवः (for °त्सतः). Bom. ed. इति चिंतयतोनिशं. —[c]) B1–3 D5 हर्षो मे (by transp.).

39 [a]) Ś2 G1 M व्यंसितां तां; B4 Dn2 व्यंशितां तु; D5 विशस्तां तु; T G3. 4 तां व्यथितां; G2 तां व्यवसितां (hypermetric) (for व्यंसितां तु). —[b]) Ś2 S (G5 missing) दृष्ट्वा तु; B1–3 तां दृष्ट्वा (by transp.). Dc1 D4. 7. 8 शनि- (for शिनि-).

40 D5 G2. 4 om. (hapl.) 40–41. B3 reads 40–42 on marg. —[a]) Dn2 G1 M1. 2. 5 (*inf. lin.* as in text) भ्राता (for माता). —[b]) G1 M1. 2 मातरस् (for भ्रा°). —[c]) D6 प्राणस्. D4 lacuna; D6 रक्ष्यो (for रक्ष्या).

41 D5 G2. 4 om. 41 (cf. v. l. 40). B3 reads 41 on marg. —[c]) Ś2 T G3 तु (for तद्). Dc1 M3–5 नेच्छेयं सात्वतान्हंत (Dc1 °ताश्चाहं); D4 °यं शाश्वतोहं तद्.

मृतं प्रत्यागतमिव दृष्ट्वा पार्थं धनंजयम् ॥ ४२
अतश्च प्रहितो युद्धे मया कर्णाय राक्षसः ।
न ह्यन्यः समरे रात्रौ शक्तः कर्णं प्रबाधितुम् ॥ ४३

संजय उवाच ।
इति सात्यकये प्राह तदा देवकिनन्दनः ।
धनंजयहिते युक्तस्तत्प्रिये सततं रतः ॥ ४४

इति श्रीमहाभारते द्रोणपर्वणि सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

## १५८

धृतराष्ट्र उवाच ।
कर्णदुर्योधनादीनां शकुनेः सौबलस्य च ।
अपनीतं महत्तात तव चैव विशेषतः ॥ १
यदाजानीत तां शक्तिमेकघ्नीं सततं रणे ।
अनिवार्यामसह्यां च देवैरपि सवासवैः ॥ २
सा किमर्थं न कर्णेन प्रवृत्ते समरे पुरा ।
न देवकीसुते मुक्ता फल्गुने वापि संजय ॥ ३

संजय उवाच ।
संग्रामाद्विनिवृत्तानां सर्वेषां नो विशां पते ।
रात्रौ कुरुकुलश्रेष्ठ मन्त्रोऽयं समजायत ॥ ४
प्रभातमात्रे श्वोभूते केशवायार्जुनाय वा ।
शक्तिरेषा विमोक्तव्या कर्ण कर्णेति नित्यशः ॥ ५ C. 7. 8296 B. 7. 183. 5 K. 7. 184. 5

---

42 Ś2 K1.2 D1.2.6 om. (hapl.) 42. B3 reads 42 on marg. — a) B4 D4.5.7.8 ततः; M2 अथ (for अतः). Dn2 स (for सु-). — c) T G3.4 मृत्यु-; G1 M मृत-; G2 मृत्योः (for मृतं).

43 a) B1 ततश्च; B5 हतश्च (sic) (for अ°). — b) G1 M1.2 कर्णेन (for कर्णाय). — d) S (G5 missing) शक्तः कर्णप्रबाधने. — After 43, G1 M ins.:

1256* सात्यकिरुवाच ।
ध्रुवस्तस्य जयो नित्यं दीर्घमायुः प्रवर्तते ।
यस्य त्वं पुरुषव्याघ्र शिवाय सततं स्थितः ।
[ (L. 1) G1 M1.2 चायुः (for आयुः). ]

44 Ś K1–3 D (except Dn2) om. the ref. — a) Dc1 Dn1 सात्यकिरिति तं (Dc1 सं-) प्राह. — b) B5 तथा (for तदा). — d) D4 चरन्; S (G5 missing) धृतः (for रतः). D5 सततं तत्प्रियं चरन्.

Colophon om. in Ś K1–3 T G2–4 M3–5: K5 G5 missing. — *Sub-parvan:* D1 घटोत्कचवध. — *Adhy. name:* K4 B Dc1 Dn1 D1.2.4.5.7.8 G1 M1.2 रात्रियुद्धं; D6 रात्रियुद्धे सात्यकिं प्रति कर्णादिमोहनं कथनं श्रीकृष्णेन; Bom. ed. रात्रियुद्धे कृष्णवाक्यं. — *Adhy. no.:* B3 180; Dn1 183; D2 184; D3 76; G1 M1.2 176. — *Śloka no.:* Dn1 46.

### 158

☞ This adhy. is missing in K5 G5 (cf. v. l. 7. 125. 14; 137. 9).

1 G3 om. the ref. — a) D3.6 G1 M कर्णदुःशासनादीनां. — c) D4.5.7.8 तावत् (for तात). — d) K2 तावदेव (for तव चैव).

2 a) K1 D2 यदि जानीत; B1.3.5 Dn2 यदा (Dn2 °दि) जानीथ; Dc1 Dn1 यदा जानाति; D4 यदा ज्ञानीत (sic); T यथा जानीत; G2 यदजानीत (for यदाजा°). — b) D4 S (G5 missing) एकघ्नां (for °घ्नीं). — c) B (except B2) Dc1 असंसह्यां (for असह्यां च). G1 M4 अनिवार्यमसह्यं च.

3 G3 om. 3ab. — a) Dn2 किमर्थे. K4 B Dc1 Dn1 D2 तु; T G2.4 च; M1.2 नु (for न). — b) Dc1 Dn1 संगरे (for समरे). D2 पुनः (for पुरा). — d) K4 B D फाल्गुने (for फ°). D1.3 च; G2 न (for वा).

4 b) B5 वो; D1 T G3.4 च (for नो). — c) D2 T G2–4 रात्रौ रात्रौ कुरुश्रेष्ठ; D4 रात्रौ कुलकुरुश्रेष्ठ. — d) Ś1 K3 समयं; Dn2 D2–5.7.8 S (G5 missing) मंत्रो नः (for मन्त्रोऽयं). B Dc1 Dn1 मंत्रोयं संप्रवर्तते.

5 a) Dn2 D4.7.8 -काले; D2.5 -काळे (for -मात्रे).

C. 7. 8299
B. 7. 183. 5
K. 7. 184. 6

ततः प्रभातसमये राजन्कर्णस्य दैवतैः ।
अन्येषां चैव योधानां सा बुद्धिर्नश्यते पुनः ॥ ६
दैवमेव परं मन्ये यत्कर्णो हस्तसंस्थया ।
न जघान रणे पार्थं कृष्णं वा देवकीसुतम् ॥ ७
तस्य हस्तस्थिता शक्तिः कालरात्रिरिवोद्यता ।
दैवोपहतबुद्धित्वान्न तां कर्णो विमुक्तवान् ॥ ८
कृष्णे वा देवकीपुत्रे मोहितो देवमायया ।
पार्थे वा शक्रकल्पे वै वधार्थं वासवीं प्रभो ॥ ९

धृतराष्ट्र उवाच ।

दैवेनैव हता यूयं स्वबुद्ध्या केशवस्य च ।
गता हि वासवी हत्वा तृणभूतं घटोत्कचम् ॥ १०
कर्णश्च मम पुत्राश्च सर्वे चान्ये च पार्थिवाः ।
अनेन दुष्प्रणीतेन गता वैवस्वतक्षयम् ॥ ११
भूय एव तु मे शंस यथा युद्धमवर्तत ।
कुरूणां पाण्डवानां च हैडिम्बे निहते तदा ॥ १२
ये च तेऽभ्यद्रवन्द्रोणं व्यूढानीकाः प्रहारिणः ।
सृञ्जयाः सह पाञ्चालैस्तेऽप्यकुर्वन्कथं रणम् ॥ १३
सौमदत्तेर्वधाद्द्रोणमायस्तं सैन्धवस्य च ।
अमर्षाज्जीवितं त्यक्त्वा गाहमानं वरूथिनीम् ॥ १४
जृम्भमाणमिव व्याघ्रं व्यात्ताननमिवान्तकम् ।
कथं प्रत्युद्ययुर्द्रोणमस्यन्तं पाण्डुसृञ्जयाः ॥ १५
आचार्यं ये च तेऽरक्षन्दुर्योधनपुरोगमाः ।

---

$D_{2}$ भवता; $D_{5}$ संभूते (for श्वोभूते). —$^{b}$) $Dn_{1}$ $D_{3-5.7.8}$ $G_{1}$ $M_{1-3}$ च (for वा). —$^{c}$) $K_{4}$ व्यमोक्तव्या; $D_{2.4}$ हि मो°; $G_{1}$ M (except $M_{4}$) प्रमो° (for विमो°). —$^{d}$) $D_{5}$ निश्चयः (for नित्यशः).

6 $^{a}$) S ($G_{5}$ missing) वीराणां (for योधानां). —$^{d}$) $Ś_{2}$ $K_{3.4}$ B $Dn_{2}$ $D_{2-4.6}$ नाश्यते (for न°). S ($G_{5}$ missing) नृप (for पुनः).

7 $^{a}$) $D_{8}$ देवम् (for दैवम्). $Ś_{2}$ एवं; $D_{2}$ अत्र (for एव). —$^{c}$) $M_{3-5}$ चाहनद् (for जघान).

8 The portion of the text from $8^{a}$ up to 7. 160. $13^{b}$ is lost in $Ś_{2}$ on missing folios. —$^{a}$) S ($G_{5}$ missing) य($M_{3}$ त)स्य हस्ते (for तस्य हस्त-). —$^{b}$) T $G_{1.2}$ M काळ- (for काल-). $K_{3}$ उद्धृता; $B_{1-3.5}$ उत्थिता; $B_{4}$ अपरा; $Dn_{1}$ $D_{1}$ उदिता (for उद्यता). —$^{c}$) $D_{4}$ -चेतत्वान् (for -बुद्धि°).

9 $Ś_{2}$ missing (cf. v. l. 8). —$^{a}$) $D_{6}$ सकृष्णे; T $G_{4}$ क्रुद्धे वा; $G_{1}$ M क्रुद्धो ($M_{4}$ °द्धे) हि; $G_{2.3}$ क्रुद्धो वा (for कृष्णे वा). —$^{b}$) T $G_{3}$ दैव-; $G_{2}$ कृष्ण- (for देव-). —$^{c}$) $M_{1.2}$ वै (for वा). $B_{4}$ देव- (for शक्र-). $D_{4.5.7.8}$ -तुल्ये (for -कल्पे). $K_{3}$ $B_{3}$ $M_{3-5}$ वा; $G_{1}$ च (for वै). —$^{d}$) $K_{1.2}$ $D_{1}$ वधार्थी ($D_{1}$ °र्थे) (for °र्थं). $K_{4}$ $Dn_{1}$ प्रभुः; $Dn_{2}$ $D_{4.5.8}$ विभो; $D_{2.6}$ पुनः (for प्रभो).

10 $Ś_{2}$ missing (cf. v. l. 8). —$^{a}$) $K_{4}$ B $Dc_{1}$ $Dn_{1}$ S ($G_{5}$ missing) [उ]प-; $D_{2}$ नि- (for [ए]व). —$^{b}$) $K_{1}$ $B_{4}$ $Dc_{1}$ T $G_{1-4}$ $M_{1.2}$ सु- (for स्व-). $Dn_{2}$ $D_{4.5.7.8}$ केशवेन (for °वस्य). —$^{c}$) $K_{1}$ om. वास. $D_{4.5}$ वासवं (for °वी). $B_{5}$ भूत्वा; $D_{6}$ T $G_{2-4}$ भित्त्वा (for हत्वा). $D_{1}$ दिवं गताहवे हत्वा.

11 $Ś_{2}$ missing (cf. v. l. 8). —$^{a}$) $K_{1}$ पुत्रश्. —$^{b}$) $D_{8}$ [ऽ]पि (for च). $K_{1}$ om. the second च. —$^{c}$) $B_{2}$ तेन वै; $B_{3.5}$ $Dc_{1}$ तेन वो; $D_{3}$ अन्येन (for अनेन).

12 $Ś_{2}$ missing (cf. v. l. 8). —$^{a}$) $Dn_{2}$ $D_{4.5.7.8}$ च (for तु). —$^{b}$) $M_{3-5}$ यत्तु (for यथा). —$^{d}$) $Dc_{1}$ $Dn_{1}$ $D_{2.4.5.8}$ हैडंबे; $D_{7}$ हेडंबे (for हैडिम्बे). $D_{2}$ समं; $D_{6}$ सति (for तदा).

13 $Ś_{2}$ missing (cf. v. l. 8). —$^{a}$) T $G_{2-4}$ $M_{3-5}$ चान्ये; $G_{1}$ $M_{1.2}$ चापि (for च ते). —$^{c}$) $K_{2}$ पांचाल्यैस्; $Dn_{1}$ S ($G_{5}$ missing) पांचालास्; $D_{4}$ पंचालैस् (for पाञ्चा°). —$^{d}$) $Ś_{1}$ K ($K_{5}$ missing) $D_{1}$ तेस्य; $D_{7.8}$ तथा (for तेऽपि). $B_{1.2.5}$ $D_{3.6-8}$ T $G_{1.3.4}$ M कथं रणे; $D_{2.4}$ महाहवे (for कथं रणम्). $G_{2}$ ते प्रकुर्वन्कथं रणे.

14 $Ś_{2}$ missing (cf. v. l. 8). $D_{2.4}$ om. (hapl.) 14–16. —$^{a}$) $Ś_{1}$ $K_{1.2}$ $B_{4}$ $D_{1}$ सौ($K_{2}$ सो)मदत्ति-; $Dn_{1}$ $D_{3.7}$ सोमदत्तेर् (for सौम°). —$^{b}$) $K_{3.4}$ $B_{3.5}$ Dn $D_{3.5.6}$ आयांतं (for आयस्तं). —$^{d}$) $D_{3}$ वधार्थिनं (for वरूथिनीम्).

15 $Ś_{2}$ missing (cf. v. l. 8). $D_{2.4}$ om. 15 (cf. v. l. 14). —$^{a}$) $D_{7}$ नर- (for इव). —$^{c}$) $Ś_{1}$ K ($K_{5}$ missing) अभ्यु($K_{1}$ °भ्य)द्ययुर्; $D_{1}$ अत्यु° (for प्रत्यु°). $B_{4}$ प्रत्युद्ययुः कथं द्रोणम्. —$^{d}$) T $G_{3.4}$ -सृंज-

द्रौणिकर्णकृपास्तात तेऽप्यकुर्वन्किमाहवे ॥ १६
भारद्वाजं जिघांसन्तौ सव्यसाचिवृकोदरौ ।
समार्छन्मामका युद्धे कथं संजय शंस मे ॥ १७
सिन्धुराजवधेनेमे घटोत्कचवधेन ते ।
अमर्षिताः सुसंक्रुद्धा रणं चक्रुः कथं निशि ॥ १८

संजय उवाच ।

हते घटोत्कचे राजन्कर्णेन निशि राक्षसे ।
प्रणदत्सु च हृष्टेषु तावकेषु युयुत्सुषु ॥ १९
आपतत्सु च वेगेन वध्यमाने बलेऽपि च ।
विगाढायां रजन्यां च राजा दैन्यं परं गतः ॥ २०
अब्रवीच्च महाबाहुर्भीमसेनं परंतपः ।
आवारय महाबाहो धार्तराष्ट्रस्य वाहिनीम् ।
हैडिम्बस्याभिघातेन मोहो मामाविशन्महान् ॥ २१
एवं भीमं समादिश्य स्वरथे समुपाविशत् ।
अश्रुपूर्णमुखो राजा निःश्वसंश्च पुनः पुनः ।
कश्मलं प्राविशद्घोरं दृष्ट्वा कर्णस्य विक्रमम् ॥ २२
तं तथा व्यथितं दृष्ट्वा कृष्णो वचनमब्रवीत् ।
मा व्यथां कुरु कौन्तेय नैतत्त्वय्युपपद्यते ।
वैक्लव्यं भरतश्रेष्ठ यथा प्राकृतपूरुषे ॥ २३
उत्तिष्ठ राजन्युध्यस्व वह गुर्वीं धुरं विभो ।
त्वयि वैक्लव्यमापन्ने संशयो विजये भवेत् ॥ २४
श्रुत्वा कृष्णस्य वचनं धर्मराजो युधिष्ठिरः ।
विमृज्य नेत्रे पाणिभ्यां कृष्णं वचनमब्रवीत् ॥ २५
विदिता ते महाबाहो धर्माणां परमा गतिः । C. 7. 8320 B. 7. 183. 27 K. 7. 184. 28

---

यान् ( for °याः ). K4 व्यूढानीका[ : ] प्रहारिणं = ( var. ) 13b.

16 Ś2 missing ( cf. v. l. 8 ). D2.4 om. 16 ( cf. v. l. 14 ). — a) D5 के ( for ये ). T G3.4 मे ( for ते ). — b) D1 सुयोधन- ( for दुर्यो° ). — c) T G3.4 कर्णद्रौणि- ( for द्रौणिकर्ण- ). — d) K2 तस्य; K4 B5 Dn ते वा; B1–4 Dc1 ते च ( for तेऽपि ). K2 कुर्वन् ( for [अ]कु° ). D6 महारणे ( for किमाहवे ).

17 Ś2 missing ( cf. v. l. 8 ). — b) Dn2 D4.7 धनंजय- ( for सव्यसाचि- ). D5.8 वृकोदरधनंजयौ. — c) B1 जपार्थं; G1 M आच्छेतां ( for समार्छन् ). Dn2 D4 T G1.3 M मामकान् ( for °का ).

18 Ś2 missing ( cf. v. l. 8 ). — b) B5 Dn2 तु ( for ते ). — c) K4 B4 Dn2 D4.5.7.8 S ( G5 missing ) सुसंरब्धा; D3.6 तु संक्रुद्धा ( for सुसं° ).

19 Ś2 missing ( cf. v. l. 8 ). — a) S ( G5 missing ) शू( G2 वी )रे ( for राजन् ). — b) M3 हि च; M4.5 च हि ( for निशि ). — c) B2–4 D5 प्राणदत्सु ( for प्र° ). Ś1 K1.2 D1 प्र- ( for च ). — d) K1.2 D1.7.8 युयुत्सु च ( sic ); D4 °त्सव ( sic ) ( for °त्सुषु ).

20 Ś2 missing ( cf. v. l. 8 ). — b) D4.5.7.8 युध्य( D5 °द्ध )माने ( for वध्य° ). — c) B1.3 Dc1 Dn1 तु ( for च ). — d) S ( G5 missing ) transp. राजा and दैन्यं.

21 Ś2 missing ( cf. v. l. 8 ). — a) D3.6 स; D7 lacuna ( for च ). Ś1 K1 D6. T G2–4 महाबाहुं ( for °बाहुर् ). — b) M2 भीमसेनः. K4 Dn2 D2.4.5.7.8 परंतप; B Dc1 Dn1 D3.6 इदं वचः; T G3.4 M1.3–5 परंतपं ( for परंतपः ). — Before 21cd, M3–5 ins. युधिष्ठिर उवाच. — e) Dc1 Dn1 D2.4.5.7.8 है( D5.7 हि )डंबस्य; Bom. ed. हैडिंबेश्च ( for हैडिम्बस्य ). B Dc1 Dn च; D2 [अ]ति-; S ( G5 missing ) वि- ( for [अ]भि- ).

22 Ś2 missing ( cf. v. l. 8 ). — b) B1 स रथे; T G2–4 स्वरथं ( for °थे ). — c) M4 राजन् ( for राजा ). — d) B2 Dc1 Dn2 D5.6 G3.4 निश्व( D6 °स्व )संश्च; Dn1 निश्व * *; D4 निश्वं * तं ( for निःश्वसंश्च ). D8 निश्वसन्नुरगो यथा.

23 Ś2 missing ( cf. v. l. 8 ). — d) D4 चापि ( for त्वयि ). — e) S ( G5 missing ) वैक्लव्यं ( for °व्यं ). T G2–4 पुरुष- ( for भरत- ). — f) D4.5.7.8 -पौरुषे ( for -पू° ).

24 Ś2 missing ( cf. v. l. 8 ). — b) B4 S ( except G2; G5 missing ) प्रभो; D2 भुवि ( for विभो ). — c) T G1.3 M वैक्लव्यम् ( for °व्यम् ). — d) G3 संशये ( for °यो ). K1.2 D5 S ( except G4; G5 missing ) विजयो ( for °ये ).

25 Ś2 missing ( cf. v. l. 8 ). — b) Dn2 D4.5.7 धर्मपुत्रो ( for °राजो ). — c) K1.2 Dn2 विसृज्य ( for विमृज्य ). — d) D5 धर्मपुत्रोब्रवीद्वचः.

C. 7. 8321 B. 7. 183. 28 K. 7. 184. 28

ब्रह्महत्याफलं तस्य यः कृतं नाववुध्यते ॥ २६
अस्माकं हि वनस्थानां हैडिम्बेन महात्मना ।
बालेनापि सता तेन कृतं साह्यं जनार्दन ॥ २७
अस्त्रहेतोर्गतं ज्ञात्वा पाण्डवं श्वेतवाहनम् ।
असौ कृष्ण महेष्वासः काम्यके मामुपस्थितः ।
उषितश्च सहास्माभिर्यावन्नासीद्धनंजयः ॥ २८
गन्धमादनयात्रायां दुर्गेभ्यश्च स्म तारिताः ।
पाञ्चाली च परिश्रान्ता पृष्ठेनोढा महात्मना ॥ २९
आरम्भाच्चैव युद्धानां यदेष कृतवान्प्रभो ।
मदर्थं दुष्करं कर्म कृतं तेन महात्मना ॥ ३०
स्वभावाद्या च मे प्रीतिः सहदेवे जनार्दन ।
सैव मे द्विगुणा प्रीती राक्षसेन्द्रे घटोत्कचे ॥ ३१
भक्तश्च मे महाबाहुः प्रियोऽस्याहं प्रियश्च मे ।
येन विन्दामि वार्ष्णेय कश्मलं शोकतापितः ॥ ३२
पश्य सैन्यानि वार्ष्णेय द्राव्यमाणानि कौरवैः ।
द्रोणकर्णौ च संयत्तौ पश्य युद्धे महारथौ ॥ ३३
निशीथे पाण्डवं सैन्यमाभ्यां पश्य प्रमर्दितम् ।
गजाभ्यामिव मत्ताभ्यां यथा नडवनं महत् ॥ ३४

---

26 Ś2 missing (cf. v. l. 8). —$^{a}$) K4 B Dc1 Dn D2. 4. 5. 7. 8 मे; T G2–4 नो (for ते). —$^{b}$) B1 कर्मणां (for धर्माणां). —$^{c}$) B (except B2) Dc1 S (G5 missing) -वध्या- (for -हत्या-). —$^{d}$) Ś1 K1–3 D1. 4. 5 M3. 4 यत् (for यः). S (except G2; G5 missing) नानुरुध्यते (for नावबु°).

27 Ś2 missing (cf. v. l. 8). —$^{b}$) Dc1 Dn1 D2. 4. 5. 7. 8 है( D5 हे )डंबेन (for हैडिम्बेन). —$^{c}$) K1. 2 Dn2 D3 सतानेन; T सदा तेन (for सता तेन). —$^{d}$) D7 om. कृतं. B4 Dc1 Dn सह्यं (for साह्यं). S (G5 missing) महात्मना (for जनार्दन).

28 Ś2 missing (cf. v. l. 8). —$^{a}$) D5 पार्थं (for ज्ञात्वा). — After 28$^{ab}$, D3. 6 ins.:

1257* आगम्य स सहायेन कृता रक्षा महात्मना ।
सोऽद्य कर्णेन निहतः पश्यतां पापचेतसाम् ।
अस्य पापस्य मोक्षं हि कथं यास्यामि माधव ।

[D3 om. line 1. — (L. 2) D3 सोथ (for सोऽद्य).]

—$^{c}$) S (G5 missing) महाबाहुः (T °हुं) (for महेष्वासः). —$^{d}$) Dc1 Dn1 मामुपाश्रितः; D2 °पास्थितः; D5 समुप°; T मामवस्थितः.

29 Ś2 missing (cf. v. l. 8). —$^{b}$) Ś1 K1. 2 (marg.) Dn2 D1 स्म च (by transp.); D3. 6 चास्म (sic); G2 च सु-. Ś1 K1. 2 D1 चारिताः (sic) (for ता°). D4 दुर्गेभ्यश्च स्मृता **; T G3. 4 दुर्गे वर्त्मनि धा( G3. 4 ता )रिताः. —$^{c}$) M3–5 परित्राता (for °श्रान्ता). Dn2 पांचालीं च परिश्रांतां. —$^{d}$) Dn2 D4. 5 पृष्ठेनोद्वहतात्मना. — After 29, D7 ins.:

1258* दिशां हि विजये कृष्ण सहदेवस्य चाज्ञया ।
लङ्कां तु गत्वा पौलस्त्यः करं वै दापितो बलात् ।

30 Ś2 missing (cf. v. l. 8). —$^{a}$) K1 आरंभश्; B4 D1. 3 T G3. 4 °भांश्; B5 Dc1 आरंभं; Dn2 अभिज्ञश्; D2. 4. 5. 7. 8 आरंभे; D6 आर्दिनांश् (for आरम्भाच्). B4 च रणस्थानां; Dn1 चैव पुत्राणां; D2 चैव सर्वत्र (for चैव युद्धानां). —$^{b}$) Dn2 D7. 8 यदेव; D3. 6 यथैष; D4. 5 यदेवं (for यदेष). D1. 5 विभो (D5 °भुः); D2 पुनः; D7. 8 S (except G4; G5 missing) प्रभुः (for प्रभो). —$^{cd}$) K2. 4 B (except B4) Dc1 Dn D2 G4 मदर्थे (for °र्थं). Dn2 T G3 दुष्कृतं (for दुष्करं). T G2–4 transp. कर्म and तेन. B3–5 Dc1 Dn1 महाहवे (for °त्मना).

31 Ś2 missing (cf. v. l. 8). D2. 4. 5 om. (hapl.) 31$^{bc}$. —$^{c}$) B Dc1 Dn1 परमा (for द्विगुणा). G3 सैव द्विगुणिता प्रीती.

32 Ś2 missing (cf. v. l. 8). —$^{a}$) D4. 5. 7. 8 मम (for च मे). —$^{b}$) K4 T G3. 4 स (for च). —$^{c}$) B Dc1 Dn1 T G1. 3. 4 M1. 2 तेन (for येन). —$^{d}$) K4 D1 G1 -पातितः; B (except B4) Dc1 D2 -पीडितः; D6 -कर्शितः (for -तापितः).

33 Ś2 missing (cf. v. l. 8). —$^{b}$) Ś1 K1 D5. 6 द्राव्यमानानि. —$^{c}$) B (except B1) Dc1 Dn1 D3. 6 G4 तु सं-; D3 इमौ (for च सं-). D4. 5. 7 संयातौ; M3–5 संयुक्तौ (for संयत्तौ).

34 Ś2 missing (cf. v. l. 8). —$^{b}$) Dn2 D4. 5 एतत्पश्य; D2 एतत्सैन्य- (for आभ्यां पश्य). B1. 2. 5 पश्यत; B3 Dc1 Dn1 पश्य च; B4 पश्याव; S (G5 missing) माध( M3–5 याद )व- (for पश्य प्र-). —$^{c}$) Dn2 तत्राभ्याम् (sic) (for गजाभ्याम्). —$^{d}$) D6 बलान् (for यथा). Ś1 K (K5 missing) B Dc1 Dn D1. 3–8 G3. 4 नलवनं; T G1. 2 M नळ° (for नड°). D2 यथा ते

अनादृत्य बलं बाह्वोर्भीमसेनस्य माधव ।
चित्रास्त्रतां च पार्थस्य विक्रमन्ते स्म कौरवाः ॥ ३५
एष द्रोणश्च कर्णश्च राजा चैव सुयोधनः ।
निहत्य राक्षसं युद्धे हृष्टा नर्दन्ति संयुगे ॥ ३६
कथमस्मासु जीवत्सु त्वयि चैव जनार्दन ।
हैडिम्बः प्राप्तवान्मृत्युं सूतपुत्रेण संगतः ॥ ३७
कदर्थीकृत्य नः सर्वान्पश्यतः सव्यसाचिनः ।
निहतो राक्षसः कृष्ण भैमसेनिर्महाबलः ॥ ३८
यदाभिमन्युर्निहतो धार्तराष्ट्रैर्दुरात्मभिः ।
नासीत्तत्र रणे कृष्ण सव्यसाची महारथः ॥ ३९
निरुद्धाश्च वयं सर्वे सैन्धवेन दुरात्मना ।
निमित्तमभवद्द्रोणः सपुत्रस्तत्र कर्मणि ॥ ४०
उपदिष्टो वधोपायः कर्णस्य गुरुणा स्वयम् ।
व्यायच्छतश्च खड्गेन द्विधा खड्गं चकार ह ॥ ४१
व्यसने वर्तमानस्य कृतवर्मा नृशंसवत् ।
अश्वाञ्जघान सहसा तथोभौ पार्ष्णिसारथी ।
तथेतरे महेष्वासाः सौभद्रं युध्यपातयन् ॥ ४२
अल्पे च कारणे कृष्ण हतो गाण्डीवधन्वना ।
सैन्धवो यादवश्रेष्ठ तच्च नातिप्रियं मम ॥ ४३
यदि शत्रुवधे न्याय्यो भवेत्कर्तुं च पाण्डवैः ।
द्रोणकर्णौ रणे पूर्वं हन्तव्याविति मे मतिः ॥ ४४
एतौ मूलं हि दुःखानामस्माकं पुरुषर्षभ । C. 7. 8340 B. 7. 183. 47 K. 7. 184. 47

वचने महत्.

35 Ś$_2$ missing (cf. v. l. 8). —$^{a}$) T G$_{2-4}$ अनाधृष्यं (for °दृत्य). K$_1$ बलं बाहोर्; M$_{3-5}$ महाबाहो. —$^{b}$) B$_4$ D$_5$ मारिष; M$_{3.5}$ विक्रमं (for माधव). —$^{c}$) Ś$_1$ K$_3$ D$_{4.5}$ G$_2$ चित्रार्थतां (for °स्त्रतां). D$_{6.7.8}$ वा (for च). —$^{d}$) Dn D$_{2.4.5.7.8}$ विक्रमंति (for °मन्ते). G$_{3.4}$ [ऽ]स्य (for स्म). B Dc$_1$ विक्रमं तेज एव च.

36 Ś$_2$ missing (cf. v. l. 8). —$^{a}$) M$_{3-5}$ एवं (for एष). D$_7$ एष कर्णश्च द्रोणश्च. —$^{d}$) D$_4$ दृष्ट्वा (for हृष्टा). Ś$_1$ K (K$_5$ missing) Dn$_2$ D$_{1.6}$ G$_2$ नंदंति (for नर्दन्ति). B$_{1-4}$ Dc$_1$ Dn$_1$ संघशः; B$_5$ सर्वशः (for संयुगे).

37 Ś$_2$ missing (cf. v. l. 8). D$_{3.6}$ om. 37. —$^{a}$) K$_3$ वास्मासु; B Dc$_1$ Dn$_1$ चा° (for अ°). —$^{b}$) K$_1$ जनार्दने. —$^{c}$) K$_4$ हैडंबिः; Dc$_1$ Dn$_1$ D$_{2.4.5.7.8}$ हैडंबः; Dn$_2$ D$_1$ हैडिंबिः (for हैडिम्बः). G$_2$ M$_{3-5}$ प्राप्नुयान् (for प्राप्तवान्).

38 Ś$_2$ missing (cf. v. l. 8). —$^{c}$) T G$_{2-4}$ निहतो राक्षसश्रेष्ठो.

39 Ś$_2$ missing (cf. v. l. 8). —$^{b}$) M$_3$ महात्मभिः (for दुरा°). —$^{c}$) S (G$_5$ missing) तदा (for रणे). —$^{d}$) Ś$_1$ K (K$_5$ missing) D$_1$ परंतपः; D$_5$ G$_4$ महाबलः (for °रथः).

40 Ś$_2$ missing (cf. v. l. 8). —$^{a}$) K$_1$ निरुद्धश्च; B$_4$ विरुद्धाश्च (for नि°). D$_7$ om. श्च वयं. D$_{3.6}$ संख्ये (for सर्वे). —$^{b}$) Dn$_2$ D$_{2.4.5.7.8}$ T G$_{2-4}$ M$_3$ महात्मना (for दुरा°). —$^{d}$) Ś$_1$ K (K$_5$ missing) D$_1$ तस्य; M$_{3-5}$ तु न (sic) (for तत्र).

41 Ś$_2$ missing (cf. v. l. 8). —$^{a}$) M$_3$ महोपायः (for वधो°). D$_{3.6}$ उपदिष्टे वधोपाये. —$^{b}$) G$_2$ कर्णाय (for कर्णस्य). —$^{c}$) D$_1$ व्यायच्छतस्तु. D$_{7.8}$ G$_1$ M$_{3-5}$ भल्लेन; M$_{1.2}$ कर्णेन (for खड्गेन). D$_{3.6}$ चरतस्तस्य खड्गेन. —$^{d}$) K$_4$ D$_1$ चक्रं (for खड्गं). T G$_{3.4}$ सः (for ह). D$_{7.8}$ द्विधा ज्यां निचकर्त ह.

42 Ś$_2$ missing (cf. v. l. 8). —$^{c}$) T G$_{3.4}$ तरसा (for सहसा). D$_4$ om. (hapl.) from सा up to पार्ष्णि (in 42$^{d}$). —$^{d}$) K$_2$ प्राष्ट्रि-; K$_3$ D$_1$ S (except G$_2$; G$_5$ missing) प्राष्टि- (for पार्ष्णि-). —$^{e}$) D$_{4.5}$ T G$_{2-4}$ M$_{3-5}$ अथेतरे (for तथे°).

43 Ś$_2$ missing (cf. v. l. 8). —$^{b}$) Dc$_1$ D$_{3.7}$ गांजीव- (for गाण्डीव-). K$_1$ D$_6$ -धन्विना (for -धन्वना). —$^{d}$) Dn$_2$ तु (for च). M$_3$ महत् (for मम).

44 Ś$_2$ missing (cf. v. l. 8). —$^{b}$) M$_{1.2}$ रणे (for भवेत्). K$_1$ lacuna; B Dc$_1$ Dn$_1$ हि; T G$_{2-4}$ स; G$_1$ M स्म (for च). —$^{c}$) B Dc$_1$ Dn$_1$ S (G$_5$ missing) कर्णद्रोणौ (for द्रोणकर्णौ).

45 Ś$_2$ missing (cf. v. l. 8). —$^{a}$) D$_{2.4.5.7.8}$ एतन् (for एतौ). K$_2$ मुखौ हि; K$_3$ B (except B$_4$) Dc$_1$ Dn हि मूलं (by transp.). —$^{b}$) B$_3$ D$_5$ भरतर्षभ. — G$_3$ om. 45$^{c}$–46$^{d}$. —$^{c}$) Dn$_2$ om. from समासाद्य up to ततो (in 49$^{a}$). —$^{d}$) K$_2$ (*sup. lin.*). 4

C. 7. 8341 B. 7. 183. 48 K. 7. 184. 47 एतौ रणे समासाद्य पराश्वस्तः सुयोधनः ॥ ४५
यत्र वध्यो भवेद्द्रोणः सूतपुत्रश्च सानुगः ।
तत्रावधीन्महाबाहुः सैन्धवं दूरवासिनम् ॥ ४६
अवश्यं तु मया कार्यः सूतपुत्रस्य निग्रहः ।
ततो यास्याम्यहं वीर स्वयं कर्णजिघांसया ।
भीमसेनो महाबाहुर्द्रोणानीकेन संगतः ॥ ४७
एवमुक्त्वा ययौ तूर्णं त्वरमाणो युधिष्ठिरः ।
स विस्फार्य महच्चापं शङ्खं प्रध्माप्य भैरवम् ॥ ४८
ततो रथसहस्रेण गजानां च शतैस्त्रिभिः ।
वाजिभिः पञ्चसाहस्रैस्त्रिसाहस्रैः प्रभद्रकैः ।
वृतः शिखण्डी त्वरितो राजानं पृष्ठतोऽन्वयात् ॥ ४९
ततो भेरीः समाजघ्नुः शङ्खान्दध्मुश्च दंशिताः ।
पाञ्चालाः पाण्डवाश्चैव युधिष्ठिरपुरोगमाः ॥ ५०
ततोऽब्रवीन्महाबाहुर्वासुदेवो धनंजयम् ।
एष प्रयाति त्वरितो क्रोधाविष्टो युधिष्ठिरः ।
जिघांसुः सूतपुत्रस्य तस्योपेक्षा न युज्यते ॥ ५१
एवमुक्त्वा हृषीकेशः शीघ्रमश्वानचोदयत् ।
दूरं च यातं राजानमन्वगच्छज्जनार्दनः ॥ ५२
तं दृष्ट्वा सहसा यान्तं सूतपुत्रजिघांसया ।
शोकोपहतसंकल्पं दह्यमानमिवाग्निना ।
अभिगम्याब्रवीद्व्यासो धर्मपुत्रं युधिष्ठिरम् ॥ ५३
कर्णमासाद्य संग्रामे दिष्ट्या जीवति फल्गुनः ।

---

B Dc1 Dn1 D2.5.6 समाश्वस्तः (for परा°).

46 Ś2 missing (cf. v. l. 8). Dn2 G3 om. 46 (cf. v. l. 45). —$^{a}$) Dc1 तत्र; D4.5 स तु (for यत्र). —$^{b}$) D2 सानुजः (for °गः). —$^{c}$) D2 महाबाहुं; D3.6 °राज (for °बाहुः). —$^{d}$) D4 om. from दूर up to महाबाहु (in 47$^{e}$). M3–5 द्रोणानीके जयद्रथं.

47 Ś2 missing (cf. v. l. 8). Dn2 om. 47 (cf. v. l. 45). D4 om. 47$^{abcde}$ (cf. v. l. 46). Dc1 Dn1 om. 47$^{c}$–48$^{b}$. —$^{c}$) Ś1 K1–3 D1.3.6 यत्तो (for ततो). D5 योधामि; M3–5 योत्स्यामि (for यास्यामि). —$^{d}$) D2.5.7.8 सूतपुत्र- (for स्वयं कर्ण-).

48 Ś2 missing (cf. v. l. 8). Dn2 om. 48 (cf. v. l. 45). Dc1 Dn1 om. 48$^{ab}$ (cf. v. l. 47). Before 48, M3–5 ins. संजय उवाच. —$^{a}$) G2 यथा (for ययौ). B1 D2.4.5.7.8 कर्णं (for तूर्णं). —$^{b}$) T G2–4 यतमानो (for त्वरमाणो). —$^{c}$) S (G5 missing) विस्फा(G3 °स्फा)र्य सु- (M3–5 च) (for स विस्फार्य). —$^{d}$) Ś1 K3 चाध्माय; K1.2 D1 चाध्माप्य; K4 D4.8 प्र(D8 प्रा)ध्माय; Dn1 आपूर्य; D3.5 तु(?)ध्माप्य (D5 °य); D7 lacuna (for प्रध्माप्य). D7 om. भैरवम्.

49 Ś2 missing (cf. v. l. 8). Dn2 om. up to ततो (cf. v. l. 45). —$^{a}$) Ś1 वृतो (for ततो). G1 M गज- (for रथ-). —$^{b}$) D4.5 G1 M रथानां (for गजानां). D3.6 नियुतैस् (for च शतैस्). —$^{d}$) K4 lacuna; B Dc1 Bom. ed. पां(Bom. ed. पं)चालैः स-; D4.5.7.8 सहस्रैस्तु (D7.8 °स्रैश्च); T G2–4 केकयैश्च (for त्रिसाहस्रैः). Dn1 पांचालैः सह मद्रकैः. —$^{e}$) K3 त्वरितं (for °तो). —$^{f}$) Ś1 K3 [ऽ]भ्ययात्; B4 G1.2 M1.2 [ऽ]न्वगात् (for ऽन्वयात्).

50 Ś2 missing (cf. v. l. 8). —$^{a}$) M3 समाजग्मुः (for °जघ्नुः). —$^{b}$) Ś1 K1–3 D1.4.8 उच्चैश् (for दध्मुश्). D5 शंखांश्चैव पृथक्पृथक्; S (G5 missing) पणवा(M1 पटहा-; M2 पन्नहा)नकगोमुखान् (G2 M3–5 °खाः). —After 50$^{ab}$, S (G5 missing) ins.:

1259* शङ्खशब्दरवांश्चैव बाणशब्दांश्च दंसिताः ।

[ M3.5 चक्रुः शंखरवांश्चैव (for the prior half). ]

—$^{c}$) K3 पंचालाः.

51 Ś2 missing (cf. v. l. 8). —$^{c}$) Ś1 K1.2 T G3.4 त्वरितं (for °तो). —$^{e}$) K1.2.4 D1 -पुत्रं वै; G1 M -पुत्रं स (for -पुत्रस्य). —$^{f}$) Ś1 K (K5 missing) B4 D3.4.5.7.8 विद्यते (for युज्यते). D3.6 युक्तमेतन्न विद्यते.

52 Ś2 missing (cf. v. l. 8). —$^{b}$) D3.4.6 अनोदयत्; D5 अचोदयन्. —$^{c}$) K1.3 D2 M3–5 च यांतं; K4 Dc1 Dn1 प्रयां(Dc1 °या)तं; D3.5.6 या(D6 जा)तं च (by transp.). —$^{d}$) D6 अन्वागच्छज्.

53 Ś2 missing (cf. v. l. 8). —$^{a}$) D4 यातं (for यान्तं). —B4 om. 53$^{c}$–54$^{b}$. —$^{c}$) T G3.4 M3–5

सव्यसाचिवधाकाङ्क्षी शक्तिं रक्षितवान्हि सः ॥ ५४
न चागाद्द्वैरथं जिष्णुर्दिष्ट्या तं भरतर्षभ ।
सृजेतां स्पर्धिनावेतौ दिव्यान्यस्त्राणि सर्वशः ॥ ५५
वध्यमानेषु चास्त्रेषु पीडितः सूतनन्दनः ।
वासवीं समरे शक्तिं ध्रुवं मुञ्चेद्युधिष्ठिर ॥ ५६
ततो भवेत्ते व्यसनं घोरं भरतसत्तम ।
दिष्ट्या रक्षो हतं युद्धे सूतपुत्रेण मानद ॥ ५७
वासवीं कारणं कृत्वा कालेनापहतो ह्यसौ ।
तवैव कारणाद्रक्षो निहतं तात संयुगे ॥ ५८
मा क्रुधो भरतश्रेष्ठ मा च शोके मनः कृथाः ।
प्राणिनामिह सर्वेषामेषा निष्ठा युधिष्ठिर ॥ ५९
भ्रातृभिः सहितः सर्वैः पार्थिवैश्च महात्मभिः ।
कौरवान्समरे राजन्नभियुध्यस्व भारत ।
पञ्चमे दिवसे चैव पृथिवी ते भविष्यति ॥ ६०
नित्यं च पुरुषव्याघ्र धर्ममेव विचिन्तय ।
आनृशंस्यं तपो दानं क्षमां सत्यं च पाण्डव ॥ ६१
सेवेथाः परमप्रीतो यतो धर्मस्ततो जयः ।
इत्युक्त्वा पाण्डवं व्यासस्तत्रैवान्तरधीयत ॥ ६२ C. 7. 8361 B. 7. 183. 67 K. 7. 184. 67

इति श्रीमहाभारते द्रोणपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

-संतप्तं; G1. 2 M1. 2 -संतापं (for -संकल्पं). —$^{e}$) D2 अति- (for अभि-).

54 Ś2 missing (cf. v. l. 8). B4 om. 54$^{ab}$ (cf. v. l. 53). Before 54, B1–3. 5 Dc1 Dn D2. 3. 5. 6 M3–5 ins. व्यास उवाच. —$^{a}$) D3. 6 समरे (for संग्रामे). —$^{b}$) K3. 4 B1–3. 5 D फाल्गुनः. —$^{c}$) Dn1 D4. 5 सव्यसाची- (for °साचि-). —$^{d}$) D4 ह सः; G2 ह्यसौ (for हि सः).

55 Ś2 missing (cf. v. l. 8). —$^{a}$) Ś1 K3 चायाद् (for चागाद्). Ś1 K1. 2 D1 द्वैरथे (for °थं). —$^{b}$) Dn2 तु; D2 ते; D4. 5. 7. 8 च (for तं). B Dc1 Dn1 दिष्ट्या तेन महारणे; D3. 6 S (G5 missing) दिष्ट्या तेन नरर्षभ (D3. 6 T G3 °भः). —$^{c}$) Dc1 स्पर्धितावू; D4 वर्धितावू (for स्पर्धिनावू). B4 चोभौ (for एतौ). —$^{d}$) K1 Dn2 D4. 5. 7. 8 सर्वतः (for °शः).

56 Ś2 missing (cf. v. l. 8). —$^{a}$) Dn2 विध्यमानेषु (for वध्य°). —$^{b}$) M1. 2 व्रीलितः (for पीडितः). — Dn2 om. 56$^{c}$–57$^{d}$. —$^{d}$) K1 D1 मुच्येद्; Dn1 मोचेद् (for मुञ्चेद्).

57 Ś2 missing (cf. v. l. 8). Dn2 om. 57 (cf. v. l. 56). —$^{b}$) T G2–4 भारतसत्तम. —$^{c}$) D6 पार्थं (sic) (for रक्षो). Dn1 D7 हतो (for हतं). M3–5 दिष्ट्या युद्धे हतं रक्षः. —$^{d}$) B4 संयुगे (for मानद).

58 Ś2 missing (cf. v. l. 8). —$^{a}$) D4. 5. 7 ज्ञात्वा (for कृत्वा). —$^{b}$) Ś1 K (K5 missing) D1. 3. 6 कर्णेन (for कालेन). K2 Dn1 [अ]पकृतो; K4 D1. 3 S (G5 missing) °हतो; B1. 3 [उ]पहृतो; B2. 4. 5 Dc1 D2 [उ]पहतो; Dn2 [अ]पि हतो (for [अ]पहतो). M3–5 [ऽ]पि (for हि). —$^{c}$) K1 T तथा (for तव). —$^{d}$) M3–5 तत्र (for तात).

59 Ś2 missing (cf. v. l. 8). —$^{a}$) K1 Dn2 D1. 4–8 M1. 2 क्रुद्धो (D6 °द्धे) (for क्रुधो). G3 भारत- (for भ°). —$^{c}$) G2 अपि (for इह).

60 Ś2 missing (cf. v. l. 8). —$^{b}$) D5 सहस्रशः (for महात्मभिः). —$^{c}$) Ś1 K3 Dn2 D2. 4. 5. 7. 8 सर्वान् (for राजन्). —$^{d}$) Dn1 D8 प्रति- (for अभि-). —$^{e}$) Dn2 पंचमी- (for °मे). K1. 2 D1 प्राप्ते; K4 B Dc1 Dn1 तात (for चैव).

61 Ś2 missing (cf. v. l. 8). —$^{a}$) K2 D1 हि (for च). —$^{b}$) Ś1 D6 विचिंतयेः (D6 °यन्); K (K5 missing) B Dc1 Dn D1 अनु(D1 °न्व)चिंतय (K1. 3 °येः) (for विचिं°). —$^{d}$) Ś1 K (K5 missing) D1 दयां (for क्षमां). Ś1 K (K5 missing) B1. 3 Dn1 D1. 3. 6 T G3. 4 नित्यं (for सत्यं).

62 Ś2 missing (cf. v. l. 8). —$^{a}$) Dn2 D2. 5 सेवस्व; D4 शोचस्व (sic); D6 भजेथाः (for सेवेथाः).

# १५९

C. 7. 8363
B. 7. 184. 2
K. 7. 185. 2

संजय उवाच ।

घटोत्कचे तु निहते सूतपुत्रेण तां निशाम् ।
दुःखामर्षवशं प्राप्तो धर्मपुत्रो युधिष्ठिरः ॥ १
दृष्ट्वा भीमेन महतीं वार्यमाणां चमूं तव ।
धृष्टद्युम्नमुवाचेदं कुम्भयोनिं निवारय ॥ २
त्वं हि द्रोणविनाशाय समुत्पन्नो हुताशनात् ।
सशरः कवची खड्गी धन्वी च परतापनः ।
अभिद्रव रणे हृष्टो न च ते भीः कथंचन ॥ ३
जनमेजयः शिखण्डी च दौर्मुखिश्च यशोधनः ।
अभिद्रवन्तु संहृष्टाः कुम्भयोनिं समन्ततः ॥ ४
नकुलः सहदेवश्च द्रौपदेयाः प्रभद्रकाः ।
द्रुपदश्च विराटश्च पुत्रभ्रातृसमन्वितौ ॥ ५
सात्यकिः केकयाश्चैव पाण्डवश्च धनंजयः ।
अभिद्रवन्तु वेगेन भारद्वाजवधेप्सया ॥ ६
तथैव रथिनः सर्वे हस्त्यश्वं यच्च किंचन ।
पादाताश्च रणे द्रोणं प्रापयन्तु महारथम् ॥ ७

Colophon om. in Ś1 K1–4 D1 : Ś2 K5 G5 missing. — *Sub-parvan :* Editions घटोत्कचवध. — *Adhy. name :* B Dc1 Dn D2–8 रात्रियुद्धं ; B4 ( also ) समाप्तं घटोत्कचवधपर्वं ; T G2. 3 व्यासदर्शनं ; Bom. ed. रात्रियुद्धे व्यासवाक्यं. — *Adhy. no.* ( figures, words or both ): Dn1 184 ; D2 187 ; D3 77 ; T G3 179 ; G1 M1. 2 177 ; G2. 4 178 ; M3–5 176. — *Śloka no.:* Dc1 66 ; Dn1 67.

## 159

☞ This adhy. is missing in Ś2 K5 G5 ( cf. v. l. 7. 158. 8 ; 125. 14 ; 137. 9 ).

1 K4 om. the ref. After the ref., K2 ( marg. ) B Dc1 Dn D3. 5. 6 ins.:

1260* व्यासेनैवमथोक्तस्तु धर्मराजो युधिष्ठिरः ।
स्वयं कर्णवधाद्वीरो निवृत्तो भरतर्षभ ।

[ ( L. 1 ) D6 एव. D3. 5 तथोक्तस् ; D6 य° ( for अ° ). D5. 6 धर्मपुत्रो ( for °राजो ). — D6 om. line 2. ]

— D6 om. 1. — $^{a}$ ) D3 T G2–4 च ( for तु ). — $^{b}$ ) D4. 7. 8 धर्म- ( for सूत- ). D5 शक्त्या कर्णेन रक्षसि. — $^{c}$ ) D4. 5. 7. 8 शोकामर्ष- ; G2 दुःखाशोक- ( for °मर्ष- ). Ś1 K ( K5 missing ) D1 यातो ( for प्राप्तो ). — $^{d}$ ) B D ( except D1 ; D6 om. ) धर्मराजो ( for °पुत्रो ).

2 $^{b}$ ) K1 प्रति ( for तव ).

3 For the incident, cf. 1. 155. 38. With 3, cf. 7. 86. 49. — $^{a}$ ) K4 -विनाशार्थं ( for °शाय ). — $^{c}$ ) K1. 2. 4 D1–3. 6 T G2–4 M3–5 सशरी ; D4. 5. 8 सशक्ती ( D8 °क्तिः ) ; D7 सुसक्त- ( for सशरः ). — $^{d}$ ) D4 खड्गी ( for धन्वी ). Ś1 K1. 3 D1. 4. 5. 7. 8 -तापन ( for °नः ). — T G3 om. ( hapl. ) $3^{e}$–$4^{b}$. — $^{e}$ ) G1. 2. 4 M द्रोणं ( for हृष्टो ). — $^{f}$ ) K1 तदा ; K3 B Dc1 Dn1 D2 G1. 4 M मा च ( for न च ). G2 मा च भीस्ते कदाचन.

4 T G3 om. $4^{ab}$ ( cf. v. l. 3 ). — $^{b}$ ) B5 D4. 5. 7 G1. 4 M1. 2 दौर्मुखी ; Dn1 दुर्मुखश् ; D8 दुर्मुखी ( for दौर्मुखिश् ). B5 om. च. K1 D3 सुयोधनः ; K3. 4 Dn D2. 4. 7. 8 G1. 4 M यशोधरः ; G2 पथा धरः ( for यशोधनः ). — $^{c}$ ) B5 -द्रवंति ; D4 -द्रुवंतः ; D5 T G2–4 -द्रवत ( for -द्रवन्तु ). Dn2 D4. 5. 7. 8 संक्रुद्धाः ; S ( G5 missing ) संरब्धाः ( for संहृष्टाः ).

5 D5 om. 5. — $^{b}$ ) S ( G5 missing ) च दंसि( T °शि )ताः ( for प्रभद्रकाः ). — $^{d}$ ) G3 भ्रातृपुत्र- ( for पुत्रभ्रातृ- ). K4 D2 -समन्वितः ; D4 -समंततः ( for -समन्वितौ ).

6 $^{a}$ ) Ś1 K1 केकयश् ; Dn2 D1. 2. 4–8 कैकयाश्. — $^{b}$ ) K1. 4 पांडवाश्. — $^{c}$ ) K4 D2 G2 अभि( D2 °भ्य )-द्रवंत ; D4 अभिदुद्राव ( for °द्रवन्तु ). — $^{d}$ ) K1. 2 B Dc1 Dn1 कुंभयोनि- ( for भारद्वाज- ). D2 -जिघांसवः ( for -वधेप्सया ). Dn2 D4. 5. 7. 8 भारद्वाजं जिघांसवः ; G1 कुंभयोनिं युयुत्सया.

7 K1 om. ( hapl. ) 7–8 ; B2 reads the same on marg. K4 D1 om. ( hapl. ) $7^{b}$–$8^{a}$. — $^{b}$ ) D3. 6 हस्त्यश्वा ये च केचन. — $^{c}$ ) K2 B Dn D2–5. 7. 8 G1. 2 M4 पदाताश्. Dn2 द्रोणे ( for द्रोणं ). — $^{d}$ ) K3 B Dc1 Dn1 M पातयंतु ; Dn2 D3–8 प्रापतंतु ; T G2–4 वारयंतु ; G1 तापयंतु ( for प्राप° ). D7 om. रथम्.

